॥ श्रीः ॥



# ॥ श्रीशङ्करविजयमकरन्दः ॥

प्राचीनशङ्करविजयादिग्रन्थेभ्यः सङ्कलितः

# Sri Sankara Vijaya Makaranda

Compiled from all Sankara Vijayas
& other sources of Life history of
Sri Sankara Bhagavatpada

*(Third Edition)*

*With Foreword by*


Panditaraja Sastraratnakara
**Sri V. SUBRAMANIA SASTRI,**
(Reader in Sanskrit (Retd.) Annamalai University)
Chief Pandit, Advaita Sabha, Kumbhakonam.

and

**Dr. C. R. SWAMINATHAN,** Karyakar


*Compiled & Published by*


Vaidya **S. V. RADHAKRISHNA SASTRI,**
22, Veereswaram Approach Road, Srirangam-620 006

*On behalf of*

SIMILI VENKATARAMA SASTRI TRUST

**1986**

॥ श्रीगुरुभ्यो नमः ॥

# ॥ पूर्वं निवेद्यते किञ्चित् ॥

(प्रथमे संस्करणे)

**कलये भगवत्पादान् कलितैः प्राच्यवाक्सुमैः ।**
**क्लृप्तैर्यथामतिरुचि ग्रथितैः स्वोक्तितन्तुषु ॥ (१-६८)**

चिरादभिलषितोऽयं मनोरथः फलितो देशिकरूपेण दर्शिताभ्युदयायाः तस्या देव्या अव्याजया अर्भकेऽस्मिन् करुणया । तथा फलितश्च यथा महनीया अपीमं स्वादु रोचते हृद्यमिति अभिनन्दन्ति । तस्या दयानिष्यन्दसंपर्कजन्योऽयं पाकविशेषः ॥

बाल्य एव मय्याधयि मत्पितृचरणैः संस्कृतभाषायामभिरुचिसन्धायिनी व्युत्पत्तिः, यया संस्कृतवाङ्मयस्य बहुशाखस्य परिचयः पश्चान्मया सुसंपाद आसीत् । उपनीतस्य, वेदाध्ययनसंस्कृतभाषाधिगमैकपरतया नीयमाने बाल्ये कौमारे च वयसि अध्यापकानां पितृचरणानां सततान्तेवासितया, तैः प्रातः अध्यात्मविद्याधिगमायागतवद्भ्यः ब्रह्मसूत्रगीताभाष्याद्यध्यापनकाले, रात्रौ भागवतरामायणादिग्रन्थप्रवचनसमये, तदा तदा पाठ्यग्रन्थपूर्वावलोकनावसरेषु च मूलपठने प्रचोदितेन मयोपलब्धः कोऽपि संस्कारः, अतीते चत्वारिंशत्तमे वयसि, वीर्यवत्तया पुनरुद्बुद्धः, पुराणेतिहासवेदान्तप्रकरणप्रवचनेषु श्रद्धामादधात् । तदनुषङ्गेण श्रीभगवत्पादजयन्तीसमारोहेष्वन्यदा च श्रीशङ्करविजयप्रवचनं रसिकगोष्ठीषु निर्वृत्तम् ॥

रुचिवैचित्र्याय, क्वचिन्माधवीयं, अन्यत्र व्यासाचलीयं, परत्र चिद्विलासीयं चानुसृत्य भगवत्पादचरितं प्रपञ्चयता मया,

तेषां प्रातिस्विकतया कथानिर्वहणे सर्वथा इतरग्रन्थसापेक्षं सामग्र्यं अन्वभावि । ततश्च काचिदाशा बलवत्युदियाय चेतसि यत्–समग्रमपि भगवत्पादचरितविषयकं ग्रन्थजातं पठानि, तेभ्यस्तेभ्यः परिनिष्पन्नं भावमाददानि, ग्रन्थात्मना सङ्कलयानि, तेन भावुकभक्तजनमनोरञ्जनं करवाणीति । तस्याः साफल्यमाशासानः, भगवत्पादावतारभूतेषु काञ्चीक्षेत्रे शिवास्थाने लोकहिताय तपस्यत्सु परमाचार्यश्रीचरणेषु विज्ञापनामेनामकरवं, समस्तभगवत्पादचरितविषयकग्रन्थजातपठने सारसङ्कलने च अनुग्रहविधानाय । ते दयार्द्रेण दृगञ्चलेन अभयदेन करेण चान्वग्रहीषुः । तत्रैव उत्तरभारतविजययात्रानन्तरं सन्निहितेषु काञ्चीकामकोटिपीठाधिपजगद्गुरुश्रीचरणेषु विज्ञापनामकरवं अनुग्रहविधानाय । मदीयं मनोरथमभिनन्दन्तस्ते तत्क्षण एव श्रीमठपुस्तकालयतः भगवत्पादचरितसंबद्धं प्राचीनमाधुनिकं मुद्रितममुद्रितं च ग्रन्थजातं सङ्कलय्य मह्यं कृपया दत्वा, यथावकाशं पठितुं परिशीलयितुं ग्रन्थरूपेण सङ्कलयितुं च मां सानुग्रहमादिशन् । आशानुसारं अभिलषितार्थसाधयित्रीं तेषां जगद्गुरुपूज्यचरणानां करुणामेकां अवलम्ब्य श्रीभगवत्पादचरितानुसन्धाने इतरत्र मुद्रितग्रन्थसंग्रहणे अमुद्रितग्रन्थान्तरमातृकान्वेषणे प्रवृत्तस्य, ततस्ततो मुद्रिता अमुद्रिताश्च ग्रन्थाः सुलभा एवासन् ॥

तेभ्यः कथाक्रमं परिशील्य सङ्कलनमुपक्रममाणस्य प्रतिग्रन्थगतः ऐतिह्यमूलकः कविकर्ममूलकश्च चरितक्रमवस्तुनिरूपणादौ मिथो विसंवादो भृशं विभ्रामकोऽभूत् । कं वा ग्रन्थं प्रधानतयाऽऽश्रित्य कथां निबध्नीयाम्? को वा ग्रन्थ एषु प्रमाणभूतः? एकस्य प्रामाणिकत्वे अन्येषामप्रमाणिकत्वापत्तिः कथं वार्येत? सर्वेषां प्रामाणिकत्वे विसंवादिषु सामञ्जस्यं कथम्?

न मया नव्यैः क्रियमाणया अन्वेषणपद्धत्या भगवत्पादचरितं विमृश्यते । परं श्रीभगवत्पादचरितकीर्तनश्रवणस्मरणमनना-दिना आत्मानं भावुकांश्च भक्तान् कृतार्थयितुं किल प्रवृत्तिरेषा । इति बहुधा भ्रममाणः पुनः गुरुकृपामेव शरणं विधाय काञ्ची-मगच्छम् । परमाचार्यश्रीचरणेषु विज्ञापने कृते, 'पुनः पुनः स्वयमेव पठ! सर्वं स्फुटं भायात् । ईप्सितं च सेत्स्यती'त्यन्व-गृह्णन् । पुनः मूलग्रन्थान्तरान्वेषणे प्रवृत्तेन मया बहोः कालात् प्राक् ग्रन्थाक्षरे मुद्रितं जीर्णं सदाशिवब्रह्मेन्द्रसरस्वतीश्रीचरणैः विरचितं जगद्गुरुरत्नमालास्तोत्रं समासादि । कथञ्चित् तत्र लब्धप्रवेशः सपदि कमप्यानन्दमननुभूतपूर्वं अन्वभवम् । पूर्वं कदाचित् कलवैस्थस्वगुरुपरमगुरुबृन्दावनस्थान् परमाचार्यान् द्रष्टुं गतः, स्वीयां सर्वतोमुखीमरतिं अशान्तिं च निवेद्य, तन्निवृत्तयेऽनुग्रहार्थे विज्ञापनामकरवं परमाचार्यश्रीचरणेषु । 'यदा यदा अशान्तिः, तदा सदाशिवब्रह्मेन्द्रान् स्मर । तेषां कृतिषु कामपि पठ; शान्तिस्ते भविता' इति ते तदा अन्वग्रहीषुः । भगवत्पादचरितसङ्कलनविषयाशान्तिनिवृत्तये चाद्य स एवानुग्रहः अवलम्बोऽजनि । तेषां योगिवर्याणां जगद्गुरुरत्नमालास्तोत्र-गतान् आदिमान् भगवत्पादचरितवर्णनपरान् ३३ श्लोकान् असकृदपठम्—आम्रेडयन्नेवासम् ॥

सपदि कथाक्रमकारिका स्फुटा बभूव । दीप्तः पन्थाः पुरतः । प्रकाशकाः सदाशिवेन्द्राः । पूर्वयायिनः आत्मबोधेन्द्राः सुषमाकाराः । अन्ये च आप्तमा गुरुवर्याः तस्मिन्नेव पथि गन्तव्यमधियन्ति ॥

असकृत् तत्र संशयसहस्रमुत्पद्येत । तदा तदा परमा-चार्यसन्निधौ विज्ञाप्येत । ते मन्दं हसन्तः कृपातरङ्गितया दृशा

जनमिमं पावयन्तः "पुनः पुनः पठ। यत्ते साधु भाति, तथा तत्सङ्कलय। सर्वं साधु संपद्येते'ति अनुगृह्णीयुः। बहुशः प्रार्थिताः मुद्रणार्थे सङ्कलितस्य समस्तस्य ग्रन्थस्य पर्यवेक्षणे च मह्य-मायुर्वेदविद्यामध्यापितवतः ब्रह्मश्रीयुत वेङ्कटसुब्रह्मण्यशास्त्रिणः स्वान्तिकस्थान् मद्गुरुवरान् न्ययुञ्जन्, यतः मम शिरसो भारोऽवरोपितः। मद्गुरुवरैः श्रीशास्त्रिमहाशयैश्च कृपया पूर्णो ग्रन्थोऽवालोकि, दोषपरिहारनिर्देशश्चाकारि। महान्तं च मुद्रणभरं भगवत्पादविषयकग्रन्थमुद्रणैकपरायणः श्रीरङ्गस्थः श्रीवाणीविलासमुद्रणालयः स्व्यकरोत्। ग्रन्थः प्रकाश्यतां नीतः॥

मधुकरवृत्तिर्मया गृहीता। यन्मधुतया मया दृष्टं तन्मया चूषितम्। पुष्पे किमप्यवशिष्टं, कुतस्तत्रादीयते इति प्रश्नस्य नावसरः। कुतश्चिद्गृहीतं कुतश्चिन्निक्षिप्येत। स्वातन्त्र्यं मधुकरस्य तथाविधम्। मधुकरः क इति विचारमकृत्वैव मधु सेव्यते बालैर्युवभिर्वृद्धैः पण्डितैः पामरैः रुग्णैररुग्णैश्च। कुत आनीतं इति जिज्ञासा नोदियात्। तथा स्वादु हृद्यं मनोरमं आह्लादकं च भवेदित्याशंसया श्रीशङ्करविजयमकरन्दः इति अभिधामदाम्॥

सङ्कलने चान्यत्रादृष्टपूर्वां कामपि शैलीमाददाम्।

१ जगद्गुरुग्रन्थमालायां प्रथमे त्रयस्त्रिंशत् श्लोका मया कथाक्रमनिर्वहणे मार्गदर्शितया गृहीताः। तत्र प्रथमं द्वादशभिः श्लोकैः ब्रह्म, सर्वविद्याप्रस्थानप्रथमाचार्यं सदाशिवं, प्रातिस्विकतया वेदान्तप्रस्थानप्रथमगुरुं नारायणं तदनु तदनुगान् ब्रह्म-वसिष्ठ-शक्ति-पराशर-व्यास-शुक-गौडपाद-गोविन्दभगवत्पादाख्यान् शङ्करप्राक्तनाचार्यान् गोविन्दयोगीन्द्रशिष्यं शङ्करसतीर्थ्यं भर्तृहरिञ्च प्रणमन्ति सदाशिवेन्द्राः। ते च सङ्कलिताः

अस्मिन्ग्रन्थे – द्वितीय आस्वादे १-१० श्लोकात्मना तृतीये ३२, ३५ श्लोकात्मना। तदनु एकविंशत्या श्लोकैः, शङ्करचरितं संगृह्णन्तः प्रतिश्लोकं भगवत्पादान्प्रणमन्ति। ते च श्लोकाः चतुर्थ आस्वादे १०-१४ श्लोकतया अष्टमे नवमे द्वादशे पञ्चदशे षोडशे अष्टादशे एकोनविंशे एकविंशे सप्तविंशे च प्रथमश्लोकतया एकोनत्रिंशे १–२, १०७–१०९ श्लोकतया त्रिंशे प्रथमश्लोकतया द्वात्रिंशे ५६ श्लोकतया च उपनिबद्धाः। अन्यत्रादृष्टा शङ्करप्राक्तनाचार्यकथा चात्र सङ्कलिता पतञ्जलिविजयादन्यतश्च ॥

२ जगद्गुरुरत्नमालायां अतिसंक्षिप्ततया बीजरूपेण उल्लिखितानां कथांशानां विस्तारः शङ्करविजयग्रन्थेषु तच्चरितप्रतिपादकेषु काव्येषु अन्यत्र चोपलब्धः संवादी यथारुचि तत्तद्ग्रन्थगतयैवानुपूर्व्या सङ्कलितः। तथा गृहीतानां ग्रन्थानां परिचयः पृथग्दीयते। सङ्कलितानां श्लोकानामाकरग्रन्थपरिचयः प्रत्याश्वासं आदौ, सङ्कलने मूलमिति शीर्षके दत्तः मूलग्रन्थपरिचयकुतुकिनामुपकाराय, ग्रन्थचौर्यापवादपरिजिहीर्षया च। तथा गृहीतेषु श्लोकेषु क्वचित् क्वचित् इतिवृत्तसंक्षेपणाय औचित्यनिर्वहणाय च अक्षरे पदे पादेऽर्धे च मया हस्तक्षेपः कृतः, स च चिह्नतः * इति ॥

३ मूले सङ्कलितः कथाक्रमः मन्मनोरुचिरः। न तेन ग्रन्थान्तरस्थो विसंवादी कथाक्रमः अप्रामाणिकः शङ्कितः। सर्वेऽपि ग्रन्थकर्तारः ऐतिह्यमेवात्र प्रमाणमुल्लिखन्ति। स्पष्टमुद्घोषयन्ति च तथा। 'ऐतिह्यमाश्रित्य वदन्ति चैवं तदेव मूलं मम भाषणेऽपि'। इति वदन्ति व्यासाचलयोगिनः (व्यासाचलीये ८-७६) पद्मपादीयटीकाया दाहप्रसंगे। अत्रैव माधवोऽप्यमुमेव श्लोकं निबद्धवान् (माधवीये १४-१६ श्लो)। ऐतिह्यं

विभिन्नम् । न कोऽपि ऐतिह्यमेकरूपतया स्रष्टुमीष्टे । लोको भिन्नरुचिः । न सर्वः सर्वमाददाति । यद्यस्मै रोचते स तदाददाति । अयमेव हेतुः कस्यचिदैतिह्यस्य ग्रहणे, इतरस्य चाग्रहणे । परं विसंवादिनोऽपि कथाभागाः ज्ञेया एव । अत एव तेषां टिप्पण्यां समावेशः कृतः तदाकरनामनिर्देशपूर्वकम् । टिप्पण्यां तथा निर्देशे च क्वचिन्मूलनिर्दिष्टे कथांशेऽभिरुच्याधिक्ये हेतुः प्रदर्शितः (पृ. १०६) क्वचित् टिप्पणीनिर्दिष्टे कथांशेऽस्वारस्ये हेतुः प्रदर्शितः (पृ. १०८)। क्वचिद्विभिन्नयोः कथाक्रमयोः सामञ्जस्यं संभाव्यते वेति चिन्ता कृता (पृ. ५०-५१, ३०६-३०७) ॥

४ कर्णपरंपरया श्रुतमुदन्तमुपजीव्य, तत्तत्सन्दर्भविशेषेषु भगवत्पादैः विरचिततया उल्लिखितानां स्तोत्रप्रकरणादीनां तत्तच्चरितसन्दर्भे अंशतः समावेशः कृतः । मध्ये च पञ्चस्वास्वादेषु (२२–२६) भगवत्पादीयाभिरुक्तिभिरेव भगवत्पादप्रतिपादिते अद्वैतदर्शने प्रतिपाद्यानां अनुबन्धादिफलान्तानां विषयाणां क्रमिकः संग्रहः कृतः । भगवत्पादानां द्वे मूर्ती, एका शङ्करविजयादिषु शम्भोर्मूर्तिश्चरन्ती वर्णिता अधुना स्मर्यमाणा, द्वितीया तद्विरचितशताधिकग्रन्थरूपा अधुना अनुसन्धीयमाना । द्वे अपि मूर्ती सुदर्शे ग्रन्थस्यास्य आन्तमवलोकनेन ॥

५. प्रसिद्धोऽपि कथाभागः क्वचित्न त्यक्तः – यथा मण्डनमिश्रभगवत्पादविवादः माधवीयसदानन्दीयशङ्करविजययोरुपलभ्यमानोऽतिविस्तृतः । पूर्वोत्तरमीमांसाविचारात्मकोऽयं विस्तृततया भगवत्पादीयभाष्यग्रन्थेषु उपलभ्यते । दुरूहशास्त्रविचारपरोऽयं अंशः भाष्यजाताधिगमैकगम्यः पूर्णतयेति तत्र

जोषंभावः आदृतः । अन्यत्र विस्तृततयोपलभ्यमानः कथांभागः अतीव संक्षिप्यात्र दत्तः विस्तरे कथानिर्वहणश्रमो महानिति हेतोः । यथा परकीयकायप्रवेश–कामशास्त्राध्ययन–वाणीजयादिकथा माधवीयादावतिविस्तृता, अत्र तु शङ्कराभ्युदयगतेन जगद्गुरुरत्नमालागतेन चैकैकेन श्लोकेन निर्वाहः कृतः। (२९ आ. ६७–१०७) ॥

६ क्वचित् शङ्करविजयग्रन्थगत वेदान्ततत्वनिरूपणमुपेक्ष्य भगवत्पादीयग्रन्थगतेन तत्समानार्थकेन सन्दर्भेण निर्वाहः कृतः । यथा गोविन्दयोगीन्द्राणां सकाशात्सन्यासं प्राप्य चातुर्मास्यव्रतानुष्ठानकाले ब्रह्मस्वरूपमननप्रक्रियायां (पृ. ६९) सुरेश्वराय तत्त्वोपदेशे च (पृ. १३८) ॥

ग्रन्थेऽस्मिन् सङ्कलितेषु २७८७ श्लोकेषु भगवत्पादैः विरचिताः श्लोकाः १२३४। प्राच्यशङ्करविजयादिभ्यस्तत्रोपलभ्यमानयैवानुपूर्व्या उद्धृताः श्लोकाः १३६२। पूर्वोत्तरकथयोरननुबन्धिनोः संश्लेषणाय क्वचित्कथासङ्ग्रहणाय रचिताः, क्वचिद्बहुश्रुतां कथामुपजीव्य निबद्धाः (यथा पृ. ४७) देव्या अनुग्रहप्राप्तिविषयकाः (पृ. १०९-११४) मातुरार्याम्बायाः शङ्करस्य च संवादात्मको भागः) इत्याहत्य १९१ एव श्लोकाः सङ्कलयितुः इति पुष्पमालायां अदृश्यस्य सतः सूत्रस्येवास्ति मे गतिः ॥

एवं यथामतिरुचि सङ्कलितमेनं ग्रन्थं भावुकानां पुरत उपस्थापये ।

विबुधाः प्रणम्य मूर्ध्ना बहुधा वः प्रार्थये कृतावस्याम् ।
अर्पयत दृशं दयया निन्दत परतोऽभिनन्दत वा ।

परिचरतः किञ्चिदपि प्रकृतिर्भवति प्रमाद इति ।
मा तान् गणयत दोषान् वरलानभिनन्दतात्र गुणान् ॥

अन्ते च स्मरामि भक्त्या तान् स्मरणीयान् चित्सुख-व्यासाचलानन्दगिरि-माधव-लक्ष्मण-राजचूडामणिमखि - राम-भद्रमखिप्रमुखान् प्राक्तनान् कवीन्, यैर्विरचितान् भगवत्पाद-चरितविषयकप्रबन्धानुपजीव्य ग्रन्थोऽयं प्रकाशितः । तथैवास्मिन् सङ्कलने उपयोगितया स्वकीयग्रन्थागारगतभगवत्पादविषयनैक-ग्रन्थजातानां परिशीलनावकाशं दत्तवद्भ्यो महनीयेभ्यश्च कृतज्ञतां निवेदये ॥

तमिलदेशे अतिदुष्करत्वेनाद्यत्वे प्रथिते संस्कृतग्रन्थमुद्रणे दुष्करताचिन्ताया अप्यवकाशमदत्वा, ग्रन्थस्यास्य मुद्रणं साधु हृदयङ्गमं यथा निर्वर्त्य उपकृतवन्तः श्रीरङ्गस्थ श्रीवाणीविलास-मुद्रणालयाधिकारिणः; विशिष्य तत्र मह्यं मातृकाशोधनादौ प्रतिसंस्कृतौ च परामर्शदानेन मम भारं लघूकृतवन्तः ब्रह्मश्रीयुत के. एस. वेङ्कटरामशास्त्रिवर्याः श्लाघनीयाः ॥

ग्रन्थस्य परिपूर्तये बहूपकृतवद्भ्यः एतेभ्यः प्रणामपुरस्सरां कृतज्ञतां निवेदये । (१) महनीया ब्रह्मविद्वराः पण्डितराज शास्त्ररत्नकर ब्रह्मश्रीयुत सुब्रह्मण्यशास्त्रिवर्याः ग्रन्थस्यास्य आमुखं दत्वा मामन्वगृह्णन्त । निसर्गसिद्धा तेषां शिष्यहिता-चरणप्रवणता । तच्च तच्छिष्यीभवनभागधेयं दूरे ममास्मिन् जन्मनि । परं ते स्निह्यन्ति दयन्ते च मयि कुतोऽपि । सैवा-हैतुकी कृपा आमुखलेखने हेतुः । एते प्रणामशतेनाभ्यर्थ्यन्ते

'अनुग्राह्योऽयं जन एतादृशार्हन्तीसिद्धये' इति । (२) मदीया गुरुवरा: ब्रह्मश्री वेङ्कटसुब्रह्मण्यशास्त्रिपादा: मदीयं सार्वदिकं सार्वत्रिकं कुशलमाशंसन्ते सदा । समग्रस्य ग्रन्थस्यास्य पूर्वावलोकनेन प्रकाशनयोग्यतां संपादितवतां तेषां करणैस्त्रिभिरपि किमपि कर्तुं न पारये, यावदायु: 'तदनुगृहीतया प्रतिभया यशस्वी जीवामी'ति परं स्मर्तुमीशे । (३) शङ्कराभ्युदयकाव्यस्य अडयार ग्रन्थकोशागारगतस्य प्रतिरूपककरणेन कार्यभारं लघूकृतवान् मम मित्रं आयुर्वेदाचार्य: बा. वैद्यनाथ:, अन्ये च पुस्तकादिवितरणेनोपकृतवन्त: तेषां कृतज्ञतां नतेन शिरसा निवेदये ॥

ग्रन्थोऽयं मत्पितृचरणस्मरणार्थे प्रवर्तितया संस्थया शिमिलि वेङ्कटराम शास्त्री ट्रस्ट् नाम्न्या प्रकाश्यते । चोलदेशे बहुविख्याता मत्पितृचरणा: बाल्य एव स्वपितु: श्री कृष्णशर्मण: सकाशादधीतस्ववेदशाखा:, चम्पकारण्यक्षेत्रमध्युषितवतां, भारद्वजकुलतिलकशिवावतारश्रीमदप्पयदीक्षितेन्द्रान्ववायसंभूतानां न्यायेन्दुशेखरादिबहूज्ज्वलग्रन्थकर्तॄणां श्री त्यागराजमखीन्द्रणां पौत्राणां शास्त्ररत्नाकर-महोपदेशक-शास्त्रतिलक-महामहोपाध्याय यज्ञस्वामिशास्त्रिणां प्रेष्ठान्तेवासिन: तेषां सकाशात् समधिगताध्यात्मतत्वा: श्रुतिस्मृतीतिहासपुराणदर्शनप्रवचनयापितनिजायुष: सारगर्भितसरलवाग्वैखरीविलासा आसन् । अकामहतश्रोत्रियास्ते प्रातस्स्मरणीयां स्वामुत्तमां आदर्शभूतां जीविकां अध्ययने अध्यापने च व्ययितवन्त: । एष ग्रन्थसङ्कलनव्यवसाय:, सङ्कलनोपयोगिबहुग्रन्थपरिशीलनव्यव-

सायंश्च तेषां दिवङ्गतानां मोदावहो भवेदिति प्रतीक्षमाणा एषा संस्था इदंप्रथमतया ग्रन्थप्रकाशनेन धन्यतमामात्मानं संभावयन्ती कामकोटिपीठादिशाङ्करपीठगतानां प्राच्यानां बोधेन्द्रसरस्वती विद्यारण्यप्रभृतीनां महनीयानां च चरितसङ्कलनाशां हृदि धत्ते । श्रीगुरुकृपया तत्सर्वं साधु सेत्स्यतीति प्रतीक्षे ॥

**अकामहतता तेषां जीवितानन्ददायिनी ।**
**सन्तर्ति समनुक्रम्य पुष्णातु श्रियमुत्तमाम् ॥**

इति पूज्यपितृचरणस्मरणपूर्वकं ग्रन्थमिममुपसंहरति ।

त्रिशिर:पुरी
6–5–1978

**शि. वे. राधाकृष्णशास्त्री ।**

॥ श्रीगुरुभ्यो नमः ॥

# आमुखम्

( प्रथमे संस्करणे )

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशङ्करं लोकशङ्करम् ॥

"आचार्यदेवो भव" इति शास्ति श्रुतिः । "गुरोरनुग्रहेणैव पुमान् पूर्णः प्रजायते" । इत्यभियुक्ता वदन्ति । सर्वस्य जगतः ज्ञानदाता गुरुः समस्तविद्याधिपः परमेश्वर एव । "को हि जगद्गुरुरुक्तः, शम्भुः, ज्ञानं यतः शिवादेव" इति प्रश्नोत्तररत्नमालिकायां भगवत्पादाः शम्भुं जगद्गुरुं ब्रुवते । परमेश्वर एव शङ्कराचार्यरूपेणावतीर्णः इति "चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति" इति प्रमाणवचनानि घोषयन्ति । तस्मात् सर्वैरपि शङ्करभगवत्पादभक्तैर्भवितव्यम् । तेषु भक्तिश्च तदीयोपदेशपरिज्ञानेन तदीयचरितावगमेन सिद्ध्यतीति प्राचीनाः बहवः आचार्याः श्रीशङ्करविजयग्रन्थान् वितेनिरे । ऐतिह्यमवलम्बमानाः ते कथानिरूपणे क्वचित् क्वचित् विसंवदन्ते । रुचीनां वैचित्र्यात् क्वचित् क्वचित् कथायामभिनिविष्टचित्ता भवन्ति श्रीशङ्करविजयग्रन्थपरिशीलिनः । अतः परमार्थभगवत्पादभक्तानां सहृदयानां सर्वशङ्करविजयग्रन्थस्थितकथानां सारसंग्राहकः आचार्योपदेशप्रधानः कश्चन ग्रन्थो रचनीयः, येन भगवत्पादेषु पारमार्थिकी भक्तिः अभिवृद्धिमाप्नुयादिति महान् अभिलाषः चिरात् समुदपादि । तमभिलाषं पूरयति अयं पण्डितप्रवरराधाकृष्णशास्त्रिमहोदयैः निर्माय प्रकाश्यमानः श्रीशङ्करविजयमकरन्दाभिधो निबन्धः ॥

• निबन्धेऽस्मिन् आस्वादपञ्चकेन आचार्याणामुपदेशसारः तदीयवचनैरेव संकलितः प्राधान्यं भजते । तत्र द्वाविंशे आस्वादे 'वेदान्तमर्यादा' इति शीर्षकं प्रदाय, प्रस्थानत्रयभाष्य-व्यतिरिक्ते भगवत्पादानां ग्रन्थे स्थितं, 'स्वतः चित्सदानन्दाऽद्वितीयोऽप्यात्मा' इत्यादिकं 'निवृत्ताज्ञानतत्कार्यः ब्रह्मरूपेणावतिष्ठते इतीयं वेदान्तानां मर्यादा' इत्यन्तं वचनजातमतिसंक्षेपेण समस्तौपनिषदार्थसंग्राहकं निवेश्य ततः क्रमेण तत्रोक्तार्थानां संकलनं, विवरणभावमापन्नानां अन्यान्यस्मिन् प्रकरण-ग्रन्थे स्थितानामाचार्यवचनानां निर्देशेन पञ्चस्वास्वादेषु विहितमस्ति । एते पञ्चास्वादाः आत्यन्तिकीं पञ्चत्वनिवृत्तिमभीप्समानैः आस्वादनीया विराजन्ते । मण्डनमिश्रैः सह भगवत्-पादानां वादकथाभागः प्रसिद्धोऽपि, पूर्वमीमांसामतखण्डनस्य आचायभाष्यादिप्रौढग्रन्थैकसमधिगम्यत्वात् नात्र निबन्धे संकलितः । एवं परकायप्रवेशकथाविस्तारोऽपि न निरूपितोऽत्र ॥

कथासंकलने–टिप्पण्यां मूलप्रदर्शितकथाविसंवादिकथानां तत्तद्ग्रन्थनिर्देशपूर्वकं स्वयं प्रतिपादनमभिनिवेशरहिततां स्फुटयति । १ आचार्योपनयनानन्तरं शिवगुरोः स्वर्गप्राप्तिः, उतोपनयनात् पूर्वम् २ मातृनिर्याणानन्तरं प्रयागे भट्टसमागमः, उत ततः पूर्वम् ३ आचार्याणां सर्वज्ञपीठारोहणं काञ्च्यां, उत काश्मीरे. इत्यादिविप्रतिपत्तयः प्राधान्येन निर्देशमर्हन्ति । तत्र उपनयनानन्तरं शिवगुरोः स्वर्गप्राप्तिः मातुर्निर्याणानन्तरं प्रयागे भट्टसमागमः काञ्च्यां सर्वज्ञपीठारोहणमित्यादिकथा-भागस्य संकलने हेतुं, मूलग्रन्थवचनोपन्यासपूर्वकं हृदयङ्गमया सरण्या प्रतिपादयति टिप्पणी । एवं काञ्च्यामेव भगवत्पादानां स्थूलशरीरपरित्यागस्य, मठाम्नायादीनां च विविच्य कमपि

भागमनपलभ्य प्रामाणिकया पद्धत्या निरूपणमभिनिवेशराहित्येन सकलविप्रतिपन्नांशप्रतिपादनं चासाधारणो गुणः टिप्पणस्य लक्ष्यते । एकैकस्मिन्नप्यास्वादे भगवत्पादमहिमप्रतिपादकानां प्राचीनाचार्यप्रणीतानां श्लोकानां संकलनं, ग्रन्थान्ते आचार्यभगवत्पादाष्टोत्तरशतनामभिः स्तुतिश्चास्य निबन्धस्य परमं प्रकर्षमातनोति ॥

चोलेषु प्रसिद्धशिमिलिग्रामाभिजनाः आयुर्वेदभिषजः कुलपरम्परागतकाव्यनिर्माणशक्तिमन्तः श्री शङ्कराचार्यादिषु श्रीजयेन्द्रसरस्वत्यन्तेषु श्रीकामकोटिपीठाधिपाचार्येषु निरतिशयभक्तिमन्तः ब्रह्मश्रीसंपन्नाः राधाकृष्णशास्त्रिमहोदयाः बहुतरशतग्रन्थपरिचयेन सटिप्पणमिमं सहृदयास्वादनीयं श्रीशङ्करविजयमकरन्दनिबन्धं निर्माय, पूज्यानां भागवतादिसद्ग्रन्थोपदेशेनास्तिककुलजीवातूनां विदितशास्त्रहृदयानां स्वपितृपादानां श्रीवेङ्कटरामशास्त्रिपादानां स्मारकतया कल्पितनिधिद्वारा प्रकाश्य, श्रीमच्छङ्करभगवत्पादकैङ्कर्यमनुतिष्ठन्तीति महदिदं चिरपरिचितस्य मम प्रमोदावहं वर्तते । आचार्यचरणानुग्रहेण तेषां सभ्रातृकाणां वाग्विलासाभिवृद्धिः श्रेयसां परम्परा च भूयादिति भगवत्पादान् प्रार्थये ॥

कुम्भघोणम्, 27-4-78.

विदुषामनुचरः
**वे. सुब्रह्मण्यशास्त्री.**

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-षण्मतप्रतिष्ठापक

## श्रीशङ्करभगवत्पादाचर्याणां

**कालटद्यां संपद्यमाने जयन्ती महामहे**

श्रीशङ्करभगवत्पादानां श्रीकाञ्चीकामकोटिपीठाधिष्ठाने

नवषष्टितमपीठाधिपतया सिंहासनाभिषिक्तानां

## श्रीजयेन्द्रसरस्वती श्रीपादानां

**तुरीयाश्रमप्रवेश रजतजयन्त्युत्सववत्सरप्रथमोपायनतया**

## श्रीशङ्करभगवत्पादकीर्तिस्तंभप्रतिष्ठावसरे

**श्रीचरण चरण कमलयोः**

साष्टाङ्गप्रणामं अयं ग्रन्थः उपहृतः



# श्रीशङ्करविजयमकरन्दस्य सङ्कलने मूलभूतानां ग्रन्थानां परिचयः ।

१ पुराणानि :—

| | |
|---|---|
| शिवरहस्यम् | लिङ्गपुराणम् |
| कूर्मपुराणम् | वायुपुराणम् |
| भविष्योत्तरपुराणम् | शिवपुराणम् |
| मार्कण्डेयसंहिता | |

२ शङ्करविजयग्रन्थाः —

१ बृहच्छङ्करविजयः – चित्सुखाचार्यविरचितः । अस्य केचनैवांशाः पूर्वतनैः स्वकीयेषु ग्रन्थेषु उद्धृताः उपलभ्यन्ते । न पूर्णतया ॥

२ प्राचीनशङ्करविजयः–अस्यापि केचनैवांशा उपलभ्यन्ते ।

३ ब्रह्मानन्दीयशङ्करविजयः सर्वज्ञात्मश्रीचरणानां शिष्यो गाणपतो ब्रह्मानन्दः स्वान्तेवासिने योगानन्दाय भगवत्पादकथा विवृणोति दशसहस्राधिकैः पद्यैः । अस्य अमुद्रितस्य हस्तलिखिता मातृका कुम्भघोणस्थमहादेवशास्त्रिनिकटे उपलभ्यते । केचन तत उद्धृता अंशाः श्रीभगवत्पूज्यपादपूजाकल्पे महादेवशास्त्रिभिः मुद्रिताः । मदवलोकनाय तैर्दत्ता सा मातृकेति तेभ्यो धन्यवादः ।

४ व्यासाचलीयः शङ्करविजयः । श्रीकाञ्चीकामकोटिपीठाधिपाः (१४९८– ५०७ क्रिस्तुशके) महादेवेन्द्रसरस्वती श्रीपादाः अस्य कर्तारः । व्यासाचलगुहायां निरन्तरस्थित्या

व्यासाचल इति प्रसिद्धा एते । मदरास् गवर्नमेण्ट् ओरियेण्टल् मानुस्क्रिप्ट्स् लैब्ररी द्वारा प्रकाशितोऽयं ग्रन्थः ।

५ आनन्दगिरीयः शङ्करविजयः – अनन्तानन्दगिरिनाम्ना भगवत्पादान्तेवासिना ग्रथितः । सेण्टर् आफ् अड्वान्स्ड् स्टडि इन् फिलासफि, यूनिवर्सिटि आफ् मदरास् द्वारा प्रकाशितः ।

६ माधवीयशङ्करविजयः – संक्षेपशङ्करविजयाख्यः डिण्डिमाद्वैतराज्यलक्ष्म्याख्य व्याख्याद्वयोपेतः ।

७ चिद्विलासीयः शङ्करविजयविलासः–चिद्विलासविज्ञानकन्दसंवादात्मकः ।

८ शङ्करदिग्विजयसारः – सारस्वतसदानन्दविरचितः दुन्दुभ्याख्यव्याख्यायुतः ।

९ गोविन्दनाथीयं श्रीमच्छङ्कराचार्यचरितम्–तिरुप्पुणित्तुरत. दिवाकर द्विजेन्द्रेण प्रकाशितम् ।

१० केरलीयशङ्करविजयम्–सुषमादौ उदाह्रियमाणमेतत् तावतांशेन उपलभ्यते । न पूर्णो ग्रन्थोऽवालोकि ।

**३ काव्यानि —**

१ पतञ्जलिचरितम्–रामभद्रदीक्षितविरचितम् । पतञ्जलेश्चरितं मुख्यमत्र । स्वशिष्यस्य गौडस्यानुग्रहाय चन्द्रशर्मरूपेण पुनरस्यावतारं गौडानुग्रहं यत्याश्रमस्वीकरणेन गोविन्दभगवत् पादाख्यया शङ्करानुग्रहं च प्रस्तौति काव्यमिदम् ।

२ शङ्कराभ्युदयम् – राजचूडामणिदीक्षितविरचितम् । सहृदयायां मूलमात्रं मुद्रितं समग्रम् । अडयार कोशालये षष्ठाध्यायपर्यन्ता सव्याख्या मातृकोपलभ्यते ।

३ गुरुवंशकाव्यम् । विद्वद्बालक काशीलक्ष्मणशास्त्रिप्रणीतम् । सप्तमसर्गान्तं सव्याख्यं मूलमात्रं समग्रं च श्रीवाणीविलासमुद्रणालये प्रकाशितम् । शृङ्गेरी जगद्गुरु श्रीसच्चिदानन्दभारती (१७७२-१८१४) श्रीपादानामाज्ञया प्रणीतमिदम् । आदिमं सर्गत्रयं भगवत्पादचरितं वर्णयति ।

४ शङ्करमन्दारसौरभः – नीलकण्ठकृतः शङ्करमन्दारसौरभसमीराख्यया व्याख्यया युतः अमुद्रितः । मद्गुरुवर श्री वा. ह. सुब्रह्मण्यशास्त्रिपादसकाशात्प्राप्ता अस्य हस्तलिखिता मातृका ।

५ आचार्यदिग्विजयः ।

**४. भगवत्पादस्तुतिग्रन्थाः–**

१ तोटकाष्टकम्–आनन्दगिरि (तोटक) विरचितम् ।

२ जगद्गुरुरत्नमालास्तवः – सदाशिवब्रह्मेन्द्रसरस्वतीविरचितः कामकोटिपीठाधिप आत्मबोधेन्द्रसरस्वतीश्रीपादानां नाथनया कृतः । कामकोटिपीठाधिपगुरुपरम्परावर्णनात्मकेऽस्मिन्ग्रन्थे प्रथमे त्रयस्त्रिंशत्श्लोकाः भगवत्पादचरितं वर्णयन्ति । श्रीशङ्करविजयमकरन्दः एतद्ग्रन्थस्थां कथाकारिकामेव सर्वात्मना चरितसन्निवेशने अनुसरति । स्तवस्यास्य व्याख्या सुषमा आत्मबोधेन्द्रसरस्वतीश्रीचरणैः कृता प्राचीनानां बहूनां शङ्करविजयादीनां उदाहरणेन शङ्करचरितसन्निवेशे बहूपकरोति ।

३ पुण्यश्लोकमञ्जरी – व्यासाचलमहादेवेन्द्रसरस्वतीप्रशिष्यैः श्रीसर्वज्ञसदाशिवबोधेन्द्रसरस्वतीश्रीपादैः कामकोटिपीठाधिपै आत्मनः प्राक्तनानां ५५ आचार्याणां पुण्यश्लोकानां जननस्थल दीक्षानाम-पितृनाम-सिद्धिस्थलादिस्मरणार्थं कृता ।

४ भगवत्पादसप्ततिः – जगन्नाथकविविरचिता श्लोकसप्ततिः । शङ्करजयन्त्युपहारे सङ्कलिता ।

५ यतिसार्वभौमोपहारः – शङ्करकिङ्कर-ब्रह्मानन्दकर्मन्दिनरकण्ठीरवकविप्रणीतः अशीतिश्लोकात्मकः । शङ्करजयन्त्युपहारे संकलितः ।

६ जगद्गुरुपारंपर्यस्तुतिः – कूडलीशृंगेरिमठीया । गुरुपरंपरानाममालायुता । श्रीमज्जगद्गुरु कूडली शृंगेरीमहासंस्थानेन प्रकाशिता ।

७ शतश्लोकी – पोलगं रामशास्त्रिकृता ।

८ गुर्वष्टकम् – चित्सुखाचार्यविरचितम् ।

९ गुर्वष्टकम् – ब्रह्मविद्यायां प्रकाशितं अज्ञातकर्तृकम् ।

१० श्रीशङ्कराचार्यपदावलम्बनस्तोत्रम् - जगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारतीस्वामिविरचितम् ।

११ गोवर्धनपीठजगद्गुरुनाममालास्तोत्रम् ।

१२ वासनादेहस्तुतिः भगवत्पादानामतिमानुषचर्यास्तवनपरा ।

१३ श्रीशङ्कराचार्याष्टोत्तरशतनामस्तोत्रम् ।

१४ श्रीशङ्करभगवत्पादाचार्याष्टोत्तरशतनामावलिः महामहोपाध्याय पञ्चानाडु गणपतिशास्त्रिभिः रचिता । शङ्कराय नमः इति षडक्षर्याः प्रत्यक्षरमष्टादशभिः नामभिः सङ्कलिता ।

१५ श्रीशङ्कराचार्यचतुर्विंशतिनामावली ।

१६ श्रीशङ्करभगवत्पादाचार्यसहस्रनामस्तोत्रम् – हिन्दुमतकलाचारप्रचारसंघप्रंकाशितम् ।

१७ श्रीशङ्करभगवत्पादसहस्रनामस्तोत्रम् – श्रीभाष्यस्वामि-
प्रणीतम् ।

१८ शङ्करभगवत्पादपूजाकल्पः ।

१९ हुल्स्च्दृष्टः कोशः–शृंगगिरिगुरुपरंपरास्तोत्रम् ।

**५ भगवत्पादशिष्यप्रणीताः ग्रन्थाः –**

१ हस्तामलकीयम्–हस्तामलकाचार्यप्रणीतम्

२ श्रुतिसारसमुद्धरणम्-तोटकाचार्यप्रणीतम्

३ नैष्कर्म्यसिद्धिः –सुरेश्वराचार्यप्रणीता

४ बृहदारण्यकोपनिषद्वार्तिकम्–सुरेश्वराचार्यप्रणीतम्

५ तैत्तिरीयोपनिषद्वार्तिकम् -सुरेश्वराचार्यप्रणीतम्

६ पञ्चपादिका टीका–पद्मपादाचार्यप्रणीता

७ संक्षेपशारीरकम्-सर्वज्ञात्ममुनिप्रणीतम्

**६ आचार्यस्मृतिदा इतरे ग्रन्थाः –**

स्वकीयग्रन्थेष्वादावन्ते मध्ये च भगवत्पादानां तत्पूर्वाचार्याणां च प्रणतिः कृता प्राच्यैर्बहुभिराचार्यैः । तैः कृताः प्रणतिश्लोकाः प्रत्यास्वादमादावन्ते च सन्दृब्धाः भगवत्पादादीनां अनुहग्रलाभाय; तेषां ग्रन्थकर्तृणां पुण्यस्मरणाय च अस्मिन् ग्रन्थे । ग्रन्थनाम ग्रन्थकर्तृनाम च यथोद्धरणक्रमं उल्लिख्यते ।

१ द्रविडात्रेयदर्शनम्–पोलगं रामशास्त्री ।

२ शारीरकमीमांसाभाष्यवार्तिकम् – अभिनव द्रविडा-
चार्याभिध बालकृष्णानन्दसरस्वतीस्वामिनः ।

३ बालमनोरमा-सिद्धान्तकौमुदीव्याख्या-वासुदेवदीक्षितः ।

४ नटराजस्तवः-अप्पयदीक्षितेन्द्राः ।

५ ब्रह्मसूत्रानुगुण्यसिद्धिः-करुङ्गुलं कृष्णशास्त्री ।

६ ब्रह्मविद्याभरणम्-अद्वैतानन्दसरस्वतीस्वामिनः ।

७ संक्षेपशारीरकटीका तत्त्वबोधिनी-नृसिंहाश्रमस्वामिनः ।

८ तैत्तिरीयोपनिषद्भाष्यटीका-बालकृष्णानन्दसरस्वतीस्वामिनः ।

९ भाष्यभानुप्रभा-भट्टत्र्यंबकशास्त्री ।

१० अम्बास्तवव्याख्या-अर्धनारीश्वरदीक्षितः ।

११ किरणावली-सोपानपञ्चकव्याख्या बालकृष्णानन्दसरस्वतीस्वामिनः ।

१२ भामतीतिलकम्-अल्लालसूरिः ।

१३ मञ्जरी-षट्पदीस्तवव्याख्या-शङ्करानन्दतीर्थस्वामिनः ।

१४ हरिहराद्वैतभूषणम्-बोधेन्द्रसरस्वतीस्वामिनः ।

१५ वेदान्तकल्पलतिका-मधुसूदनसरस्वतीस्वामिनः ।

१६ सिद्धान्तलेशसंग्रहः-अप्पयदीक्षितेन्द्राः ।

१७ चित्सुखी-चित्सुखाचार्याः ।

१८ सिद्धान्तबिन्दुः-मधुसूदनसरस्वतीस्वामिनः ।

१९ अद्वैतामृतबोधः ।

२० अपरोक्षानुभूतिदीपका-विद्यारण्यस्वामिनः ।

२१ अद्वैतभूषणम्-शाङ्करब्रह्मसूत्रभाष्यव्याख्या-बोधेन्द्रसरस्वतीस्वामिनः ।

२२ पञ्चपादिकाविवरणम् प्रकाशात्मश्रीचरणाः ।

२३ तत्वशुद्धिः–ज्ञानघनपादाः ।

२४ आचार्यप्रशस्तिः–(ब्रह्मविद्या) श्रीचन्द्रशेखरेन्द्रसरस्वतीश्रीपादाः ।

२५ सुरेश्वरप्रशस्तिः-श्रीभाष्यस्वामिनः ।

२६ वार्तिककारो नैष्कर्म्यसिद्धिश्च-श्रीभाष्यस्वामिनः (श्रीसुरेश्वराचार्यजीवितस्मरणप्रबन्धमालायाम्)

२७ मूकपञ्चशती मूककविः ।

७ इतरे कथांशोपकारकाः ग्रन्थाः —

१ भारतगीतम्–आर्. वी. कृष्णमाचार्यः (सहृदया) ।

२ नटेशविजयम्–वेङ्कटकृष्णदीक्षितः ।

३ स्मृतिमुक्ताफलम् वैद्यनाथदीक्षितः ।

४ कालट्यां आर्याम्बाशङ्करभगवत्पादालये शिलालेखः ।

५ श्रीमुखदर्पणम्-शिवरामसूरी ।

६ सुधन्वलेखः–विमर्शः- राजराजेश्वराश्रमश्रीचरणैः प्रकाशितः ।

७ ज्योतिर्मठीयमठाम्नाय महानुशासनम् ।

८ शृङ्गगिरिमठाम्नायः ।

९ संक्षेपशारीरकोपोद्घातः–रामनाथद्विवेदी ।

१० न्यायरत्नदीपावली–आनन्दानुभवाचार्यः ।

११ सौन्दर्यलहरी व्याख्या-सौभाग्यवर्धिनी ।

१२ ,, –अरुणामोदिनी ।

१३ ,, –आनन्दगिरीया ।

१४ सौन्दर्यलहरी व्याख्या पदार्थचन्द्रिका ।

१५ सुरेश्वराचार्यजीवितस्मरणम्–अखिलभारतशङ्कर-सेवासमितिः ।

१६ कालटी– ,,

१७ ब्रह्मसिद्धेरुपोद्घातः–कुप्पुस्वमिशास्त्री ।

१८ अद्वैतग्रन्थकोशः–इष्टसिद्धीन्द्रसरस्वतीस्वामिनामन्तेवासी ।

**८ भगवत्पादैर्विरचिताः ग्रन्थाः–१ भाष्यग्रन्थाः**

१ भगवद्गीताभाष्यम्
२ तैत्तिरीयोपनिषद्भाष्यम्
३ हस्तामलकीयभाष्यम्
४ विष्णुसहस्रनामभाष्यम्
५ माण्डूक्यकारिकाभाष्यम्
६ ब्रह्मसूत्रभाष्यम्
७ सनत्सुजातीयभाष्यम्

**२ स्तोत्रग्रन्थाः–**

८ सुब्रह्मण्यभुजङ्गम्
९ देवीभुजङ्गम्
१० कनकधारास्तोत्रम्
११ अच्युताष्टकम्
१२ गुरुपादुकापञ्चकम्
१३ नर्मदाष्टकम्
१४ काशीपञ्चकम्
१५ गङ्गाष्टकम्
१६ मणिकर्णिकाष्टकम्
१७ द्वादशलिङ्गस्तोत्रम्
१८ वेदसारशिवस्तोत्रम्
१९ शिवनामावल्यष्टकम्
२० शिवपञ्चाक्षरस्तोत्रम्
२१ अन्नपूर्णाष्टकम्
२२ कालभैरवाष्टकम्
२३ षट्पदी
२४ शिवभुजङ्गम्
२५ विष्णुभुजङ्गम्
३६ गोविन्दाष्टकम्
२७ कृष्णाष्टकम्
२८ मातृपञ्चकम्
२९ यमुनाष्टकम् (प्रथमम्)

६९ मन्त्रमातृकापुष्पमाला-
स्तवः
७० श्यामलानवरत्नमालिका
७१ त्रिपुरसुन्दरीवेदपादस्तवः
७२ लक्ष्मीनृसिंहपञ्चरत्न
स्तवः
७३ पाण्डुरङ्गाष्टकम्
७४ भगवन्मानसपूजा
७५ जगन्नाथाष्टकम्
७६ ललितापञ्चरत्नम्
७७ श्रीमत्क्रमस्तवः
७८ सौन्दर्यलहरी

(अत्र आर्याष्टकं रत्नपुष्पाञ्जलिस्तोत्रं च नेपालराजकीय-कोशागारात् लब्धं श्री सि. आर्. स्वामिनाथार्यमहोदयेन प्रकाशितम् । नरसिंहाष्टकं, श्रीमत्क्रमस्तवः, गुरुपादुकापञ्चकं च ब्रह्मविद्यायां, मातृपञ्चकं शङ्करचरितनिबन्धेषु च प्रकाशितम् । अन्यत्सर्वं श्रीरङ्गस्थवाणीविलासमुद्रणालय प्रकाशित शाङ्करग्रन्थावली–जगद्गुरु ग्रन्थमालातः कामकोटिकोशस्थान प्रकाशितशङ्करस्तोत्रग्रन्थेभ्यश्च सङ्कलितम् ।)

## ३ वेदान्तादिप्रकरणग्रन्थाः —

७९ प्रपञ्चसारः
७० निर्वाणशतकम् (अद्वैत-पंचरत्नं आत्मपंचकं वा)
८१ दशश्लोकी (निर्वाणदशकं)
८२ योगतारावली
८३ स्वात्मनिरूपणम्
८४ विवेकचूडामणिः
८५ निर्वाणषट्कम्
८६ अद्वैतानुभूतिः
८७ ब्रह्मानुचिन्तनम्
८८ सदाचारानुसन्धानम्
८९ मनीषापञ्चकम्
९० तत्वोपदेशः
९१ वाक्यवृत्तिः
९२ धन्याष्टकम्
९३ जीवन्मुक्तानन्दलहरी (शिवानन्दलहरी)
९४ यतिपञ्चकम् (कौपीनपञ्चकम्)
९५ सर्ववेदान्तसिद्धान्त सारसंग्रहः

९६ अपरोक्षानुभूतिः
९७ प्रबोधसुधाकरः
९८ उपदेशसाहस्री गद्यप्रबन्धः (सकलवेदोपनिषत् सारोपदेशसाहस्री)
९९ उपदेशसाहस्री पद्यप्रबन्धः
१०० पञ्चीकरणम्
१०१ आत्मबोधः
१०२ दुर्वासनाप्रतीकारदशकम्
१०३ स्वात्मप्रकाशिका
१०४ स्वरूपानुसन्धानम् (विज्ञाननौका)
१०५ मायापञ्चकम्
१०६ शतश्लोकी
१०७ प्रौढानुभूतिः
१०८ ब्रह्मज्ञानावलीमाला
१०९ निर्वाणमञ्जरी
११० प्रश्नोत्तरमालिका
१११ एकश्लोकी
११२ भजगोविन्दम्
११३ बालबोधसंग्रहः
११४ त्रिपुरी
११५ अनुभवोल्लासः
११६ सहजाष्टकम्
११७ चिदानन्दात्मकस्तोत्रम्
११८ सोपानपञ्चकम् (उपदेशपञ्चकं, साधनपञ्चकं, अद्वैतपञ्चरत्नं वा)

एषु दुर्वासनाप्रतीकारदशकं, बालबोधसंग्रहाद्याः पञ्च च (११३-११७) ब्रह्मविद्यातः सङ्गृहीताः। अन्ये शाङ्करग्रन्थावली–जगद्गुरुग्रन्थमालातः।

भगवत्पादविरचिताः सङ्कलनेऽस्मिन् अनुदाहृताः मुद्रिता अमुद्रिताश्चेतरे ग्रन्था नामतो निर्दिश्यन्ते।

१ भाष्यग्रन्थाः —

१ ईशावास्योपनिषद्भाष्यम्
२ केनोपनिषत्पदभाष्यम्
३ केनोपनिषद्वाक्यभाष्यम्
४ कठोपनिषद्भाष्यम्

५ प्रश्नोपनिषद्भाष्यम्
६ मुण्डकोपनिषद्भाष्यम्
७ ऐतरेयोपनिषद्भाष्यम्
८ छान्दोग्योपनिषद्भाष्यम्
९ बृहदारण्यकोपनिषद्भाष्यम्
१० नृसिंहपूर्वतापिन्युपनिषद्भाष्यम्
११ नृसिंहोत्तरतापिन्युपनिषद्भाष्यम्
१२ श्वेताश्वतरोपनिषद्भाष्यम्
१३ अथर्वशिखोपनिषद्भाष्यम्
१४ अथर्वशिरोपनिषद्भाष्यम्
१५ वज्रसूच्युपनिषद्भाष्यम्
१६ सर्वोपनिषत्सारः

**२ व्याख्याग्रन्थाः —**

१७ ज्ञानांकुशव्याख्याविवरणम्
१८ ललितात्रिशतीभाष्यम्
१९ आपस्तंबधर्मसूत्र (अध्यात्मपटल)भाष्यम्
२० पातञ्जलयोगसूत्रभाष्यविवरणम्

**३ इतरे प्रकरणग्रन्थाः –**

२१ लघुवाक्यवृत्तिः
२२ अनात्मश्रीविगर्हणम्
२३ प्रातःस्मरणस्तोत्रम् (ब्रह्मध्यानपरम्)
२४ अखण्डैकरसवाक्यार्थः
२५ अद्वैतमानसिकपूजा
२६ अध्यात्मविद्योपदेशविधिः
२७ अध्यात्मसंन्यासविधिः
२८ अष्टश्लोकी
२९ आत्मचिन्तनम्
३० आत्मज्ञानोपदेशविधिः
३१ आत्मानात्मविवेकः
३२ आत्मसाम्राज्यसिद्धिः
३३ अवधूताष्टकम्
३४ एकादशोत्तरशतवाक्यग्रन्थः
३५ एकान्तनिर्णयः
३६ ज्ञानसंन्यासः
३७ निरञ्जनाष्टकम्
३८ पञ्चकोशविवेकः
३९ पञ्चीकरणभाष्यम्
४० पञ्चीकरणमहावाक्यम्

४१ पञ्चीकृतम्
४२ परमानन्ददीपिका
४३ प्रणवभाष्यम्
४४ ब्रह्मनामावली
४५ ब्रह्मानुसन्धानम्
४६ बालबोधिनी
४७ मतखण्डनम्
४८ महावाक्यमन्त्रः
४९ महावाक्यविवरणम्
५० महावाक्यार्थपञ्चीकरणम्
५१ महावाक्यार्थविचारः
५२ महावाक्यार्थविवरणम्
५३ महावाक्यार्थोपदेशः
५४ महावाक्यनिर्णयः
५५ मायाविवरणम्
५६ राजयोगसूत्रभाष्यम्
५७ वाक्यदीपिका
५८ वाक्यसुधा
५९ वेदान्ततत्त्वसारः
६० वेदान्तशास्त्रप्रकरणम्
६१ सर्वसिद्धान्तसंग्रहः
६२ स्वानुभवप्रकरणम्
६३ तत्त्वबोधः
६४ मणिरत्नमाला
६५ मुमुक्षुपञ्चकम्
६६ वैराग्यपञ्चकम्

आकरः – १ अद्वैतग्रन्थकोशः (इष्टसिद्धीन्द्रसरस्वतीशिष्यः)
२ शङ्कराचार्य (बलदेव उपाध्यायः)

---

## FOREWORD

I have great pleasure in writing a foreword to this publication which is unique in many respects. Right from the day Shri Kota Venkatachalam published his book on Indian choronology, the need to reassess the veracity of the prevalent theories concerning the date of Sankara has gained importance. But the Indian scholarly world, particularly in the field of History, accustomed to a long habit of accepting the verdicts of Western Scholars as final, has refused to address itself to this problem. To add to this, the personal prejudices, predilictions and interest of several religious institutions also played a part in ignoring the need to revise the deeprooted ideas about Sankara's date. Some of the institutions founded by Sri Sankara which were subjected to several historical vicissitudes and consequently had lost their unbroken continuity, also found it convenient to accept the theory of 8th century A. D. being the time of Sankara. The publication of a monograph and a book on the date of Mahabharata by Shri Veda Vyas (an IAS Officer of the Andhra Pradesh Cadre), once again brought to the forefront the hollowness of the conclusions arrived at by the western and oriental historians about Indian literature.

After 37 Years of Independence, our intellectual subordination to Western Orientalists is still preventing us from looking at the facts that have emerged in recent past regarding our cultural and literary achievements. Inadvertantly, many Indian scholars

are still prepared to accept that the Vedic civilisation is not earlier to the Greek civilisation.

Particularly in the case of Sankaracharya, several pontiffs who adorned the institutions established by the great Philosopher were invariably known by the name of Sankaracharya and hence there have been a tendency to attribute whatever was done or written by later Peethadhipatis, to the earliest of the line. These, so called historical facts though related to different personalities, were jumbled together and the chroniclers compiled them in the name of biography of Sankaracharya. A close perusal of the Madhaviya Sankara Vijaya would reveal that it was the work of a mediocre poet who wantonly attributed his own work to Vidyaranya Madhava. Adding insult to injury, he claims to be Navakalidasa, an appellation which would have never been welcomed by the great philosopher and saint, Vidyaranya. Some more later writers wrote Sankara Vijaya on the lines of the one mentioned above. But all of them do accept that there was an earlier authentic biography of the Great Seer. It is very doubtful whether these authors were personally acquainted with that earliest one.

Without going into the details of the cotroversy, one can definitely say that the Madhaviya Sankara Vijaya and its followers are not dependable historical documents in so far as the biographical facts of Sankara are concerned. In contrast, one can definitely infer that works like Vyasachaliya' Ananda Giri's Sankara Vijaya, Guru Ratnamala and Patanjali Charita are works written by authors who had a direct access to the earliest biography of Sankara

before it got mixed up with the lives and works of the later Acharyas in the various Peethas.

The present volume produced by Pt. Radhakrishna Shastri serves as a compilation of the facts mentioned in these earlier sources and to that extent it is a bold attempt to prove that inspite of the publicity and a stamp of authenticity gained by the Madhaviya Sankara Vijaya, it is not a dependable historical document. It has also proved that Śankara's date cannot be after the starting of the Christian era.

While establishing or trying to discover historical facts, one should not be influenced by sentiments or personal predilictions and if by accepting the date of Sankara in the B.C., if some Mutts or institutions are not able to trace their genealogical tree to its roots, it is not going to affect their antiquity nor anybody is going to question their link with the founder Adi Sankara Bhagavatpada. A country which has traced its cultural and historical traditions, even after a break of 300 years of Muslim rule followed by 150 years of British rule can very well accept the fact that these institutions had suffered some eclipses for a longer or shorter duration since the times they were established by Adi Sankara. It is said of Advaita school that it has no need to refute other schools of philosophy to get itself established, whereas other schools have the necessity to disprove Advaita for their existence. The same can be said in respect of the Kamakoti Mutt of Kanchipuram which has the unbroken tradition and hence which can accept all others as belonging to the parampara.

I once again congratulate Pt. Radhakrishna Shastri for having brought out all the facts in a cogent way and also thank him for giving me an opportunity to write this foreword. I would very much like to see this book translated into all the regional languages and English with proper referencing of the source materials so that this great 'Adhyasa' regarding Sankara Vijaya is once for all removed.

*Dr. C. R. Swaminathan.*
Kariakar.



# किञ्चिन्निवेदये

श्रीशङ्करविजयमकरन्दो मया सङ्कलितः 1978 वत्सरे। तस्यैव प्रतिकृतिमुद्रणपरिपाट्या प्रणीयते तृतीयमिदं संस्करणं, यत्र मूले टिप्पण्यां प्राक्कथने वा प्रथममुद्रितान्न किमपि विशिष्टं सन्निवेश्यते।

अस्य ग्रन्थस्य सङ्कलने मूलतयोपात्तेषु ग्रन्थेषु श्रीराजचूडामणिदीक्षितस्य श्रीशङ्कराभ्युदयं नाम अष्टसर्गात्मकं काव्यमप्येकतमम्। मनोरमं रसिकजनोपजीव्यं तत् टिप्पण्या योजितं प्रकाश्यतेऽनुपदमेव इति निवेदने कुतुकं मनः। सङ्कलने चैतादृशे मार्गदर्शिनं माधवीयशङ्करविजयग्रन्थकर्तारं उपालभे। नमामि तं पूर्वंगमाचार्यम्। श्रीमाधवः प्राक्तनैः कृतेभ्यः शङ्करविजयेभ्यः सारसंग्रहणं ग्रन्थारंभ एव प्रास्तौत्। 'प्राचीनशङ्करविजये सारः संगृह्यते मया।' "मदीये लघुसंग्रहेऽस्मिन् उद्वीक्ष्यतां शाङ्करवाक्यसारः।" "यथाऽतिरुच्ये मधुरेऽपि रुच्युत्पादाय रुच्यन्तरयोजनाऽर्हा। तथेष्यतां प्राक्कविहृद्यपद्येष्वेषाऽपि मत्पद्यनिवेशभङ्गी।" इति। श्रीमाधवेन मूलतया संभावितोऽयं ग्रन्थ इति परमोपादेयत्वमाकलय्य तस्य प्रकाशनाय प्रवर्ते।

चिराय पूर्णो मनोरथः। श्रीभगवत्पादचरिताब्धितीरे सञ्चरता मया सङ्कलिता यदृच्छालब्धाश्चेमे श्रीभगवत्पादचरितानुभवमुक्ताकणाः। एते भवतां पुरत उपह्रियन्ते। एतेन प्रसीदन्तु मयि जगद्गुरवो भगवत्पादाः तत्प्रतिष्ठापितकामकोटिपीठाधीशाश्च। शम्।

22, वीरेश्वरं अप्रोच रोड्,
श्रीरंगम्-620006

एस्. वी. राधाकृष्णशास्त्री

# श्रीशङ्करविजयमकरन्दः

## ॥ विषयानुक्रमणिका ॥

आस्वादः पृष्ठसंख्या

---



स्वस्ति श्रीमदखिल भूमण्डलालङ्कार त्रयस्त्रिंशत्कोटिदेवतासेवित कामाक्षी
देवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथ
साक्षात्कारपरमाधिष्ठान सत्यव्रतनामाङ्कित काञ्चीदिव्यक्षेत्रे शारदा
मठसुस्थतानाम् अतुलितसुधारस माधुर्य कमलासन कामिनी
धम्मिल्ल संफुल्ल मल्लिका मालिका निष्यन्द मकरन्दझरी
सौवस्तिक वाङ्निगुंफ विजृंभणानन्द तुन्दिलित मनीषि
मण्डलानाम् अनवरताद्वैतविद्या विनोद रसिकानां
निरन्तरालङ्कृत शान्तिदान्तिभूम्नां सकलभुवन
चक्रप्रतिष्ठापक श्रीचक्रप्रतिष्ठा विख्यात यशोऽलंकृतानां
निखिलपाषण्डषण्डकण्टकोत्पाटनेन विशदीकृतवेदवेदान्त
मार्ग षण्मत प्रतिष्ठापकाचार्याणां श्रीमत्परमहंस परिव्राजका
चार्यवर्य श्रीमच्छंकरभगवत्पादाचार्याणां अधिष्ठाने सिंहासना
भिषिक्त श्रीमन्महादेवेन्द्रसरस्वती संयमीन्द्राणामन्तेवासिवर्य

**श्रीमच्चन्द्रशेखरेन्द्रसरस्वती संयमीन्द्राणाम्**

अन्तेवासिवर्य

**श्रीमज्जयेन्द्रसरस्वती संयमीन्द्राणाम्**

चरणकमलयोः

साष्टाङ्गप्रणतिपूर्वकं कृतिमिमां समर्पयामः ॥





क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥

॥ श्रीगुरुभ्यो नमः ॥

॥ श्रीमहागणपतये नमः ॥

# ॥ श्रीशङ्करविजयमकरन्दः ॥

## ॥ प्रथम आस्वादः ॥

### मङ्गलाचरणम्

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥ १ ॥

दयमानदीर्घनयनां देशिकरूपेण दर्शिताभ्युदयाम् ।
वामकुचनिहितवीणां वरदां सङ्गीतमातरं वन्दे ॥ २ ॥

दयिन्या श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काप्यन्यतमिका ।
मदाराध्यश्रीमद्गुरुचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति मम देवी करुणया ॥ ३ ॥

वन्दे चन्द्रमसं चन्द्रशेखरं तमुमापतिम् ।
इन्द्रं सरस्वतीं चन्द्रशेखरेन्द्रसरस्वतीम् ॥ ४ ॥

---

(४-५) अथ ग्रन्थारम्भे मङ्गलायतनं श्रीगुरुचरणद्वन्द्वं स्वेष्टदेवतां च नमस्यन्, देशिकरूपेण दर्शितमभ्युदयं, लब्धं वाक्प्रसरं च त्रिभिः आद्यैः श्लोकैर्वर्णयित्वा, महतो विस्तृतस्यागाधस्य श्रीभगवत्पाद-चरितस्य, सङ्कलनोपयोगितयां, 'यन्मनसा ध्यायति तद्वाचा वदति' इति स्वमनोवृत्तिव्याप्यतां सम्पादयितुकामः, मनसो व्यापकत्वासिद्ध्यै

श्रीकामकोटिपीठेशं श्रीजयेन्द्रसरस्वतीम् ।
तन्मूर्त्या दर्शितक्षेमं भगवत्पादशङ्करम् ॥ ५ ॥

दयमानदीर्घनयना देशिकताभव्यदृश्यदक्षकरा ।
वामकरनिहितदण्डा गुरुमूर्तिर्मुग्धमधुरवदनाऽव्यात् ॥ ६ ॥

---

'चन्द्रमा मे मनसि श्रितः' इति मनोऽधिष्ठात्रीं देवतां भगवन्तममृतकिरणमिन्दुं प्रणमति प्रथमं – वन्दे चन्द्रमसमिति । क्षयिष्णु वर्धिष्णु च भौतिकं तत्स्वरूपं मनःसम्पत्तौ वैकल्यमापादयेदित्याशङ्कया अक्षयमकलङ्कं नित्यं तं शङ्करशिरोभूषणं भावयन्, तद्भावनाबलेन शङ्करमेव ध्यानपथे करुणया स्वयमवतीर्णं प्रणमति – चन्द्रशेखरमिति । एष एव शङ्करः स्वसंकल्यमानकथाप्रतिपाद्यः स शङ्कर इति प्रत्यभिज्ञया पुनः तं प्रणमति – तमिति । केनोपनिषत्प्रतिपाद्या हैमवती बहु शोभमाना सा उमा दयमानदीर्घनयना दयमानदीर्घनयनां गुरुमूर्तिं (भगवन्तं भगवत्पादं च) करुणया अस्मान् परिचाययन्ती तत्पार्श्वे दृष्टा, तया सह तं पुनः प्रणमति – उमापतिमिति । संकलनोपयोगिबलसंपत्त्यै 'इन्द्रो मे बले श्रितः' इति बलाधिष्ठात्रीं देवतां प्रणमति – इन्द्रमिति । अल्पीयस्यपि दुष्करे संकलने नवनवोन्मेषदायिमेधासम्पत्तये धीनामवित्रीं प्रणमति – सरस्वतीमिति । अथ अकस्मात्, ता एताः देवताः 'प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति' इति स्वस्मिन्नजातप्रत्ययः शरणं वृणुते गुरुचरणयोः प्रणिपत्य – चन्द्रशेखरेन्द्रसरस्वतीमिति । उत्तरक्षण एव स्फुरति पुरतः सा गुरुमूर्तिः धृतचन्द्र-चन्द्रशेखर-(शंकर-उमा)इन्द्र-सरस्वतीस्वरूपा गृहीततदभिधाना च, नमस्यति जनेऽस्मिन् करुणया । हृदि नटन्त्याः गुरुमूर्तेः करकमलसञ्जाता सा अन्येव, न, सैव गुरुमूर्तिः पुरतो भान्ती श्रीजयेन्द्रसरस्वतीश्रीचरणाख्या, करुणया चरति भुवने शंकराचार्यरूपा ग्रन्थप्रतिपाद्यं वस्तु मनोवृत्तिव्याप्यं सम्पादयन्तीत्यनुभवन् श्रीचरणान् प्रणमति – श्रीकामकोटिपीठेशमित्यादिना । अन्ते तन्मूर्त्या दर्शितक्षेमं भगवत्पादशङ्करं च ग्रन्थप्रतिपाद्यम् ॥

दण्डालम्बकराम्बुजं पदयुगश्लिष्यद्वटीपादुकं
शीर्षारोपितभक्तदत्ततुलसी॥ल्वादिमालाभरम् ।
मार्गाभ्यागतसज्जनाकलितसाष्टाङ्गप्रणामोन्मिषत्
कारुण्यं हृदि भावये गुरुवरं श्रीकामकोटीश्वरम् ॥ ७ ॥

## श्रीगुरुपरंपराध्यानम्

सदाशिवसमारंभां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ ८ ॥

नारायणं पद्मभुवं वसिष्ठं शक्तिञ्च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ॥

श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्यानस्मद्गुरून् सन्ततमानतोऽस्मि ॥ ९ ॥

## एतद्गुरुपरंपरानन्तर्गतप्राक्तनाद्वैताचार्यस्मरणम्

आचार्यं प्रणमामि सादरमहं तं ब्रह्मनन्दीति यः
प्रख्यातो मुनिरत्रिवंश्य उदितः संक्षेपशारीरके ।
छान्दोग्योपनिषच्च येन विवृता वाक्यैर्हि सूत्रात्मभिः
यं ग्रन्थेषु परः पुनः पुनरपि ब्रूते प्रमाणं परम् ॥ १० ॥

छान्दोग्योपनिषद्वाक्यग्रन्थकर्तॄन्नुमो वयम् ।
अद्वैतनिष्ठानाचार्यान् आत्रेयब्रह्मनन्दिनः ॥ ११ ॥

---

(१०-१३) द्रविडालयदर्शनतः । आत्रेयब्रह्मनन्दिनः द्रविडाचार्याः सुन्दरपाण्ड्यो भर्तृहरिश्चेति एते चत्वारः विशुद्धस्य अद्वैतसंप्रदायस्य प्रवर्तकेषु भगवत्पादेभ्यः प्राक्तनेषु पूर्वाचार्येषु अन्यतमाः । ब्रह्मनन्दिनः आत्रेयगोत्राः छान्दोग्योपनिषदर्थविवरणात्मकं सूत्ररूपवाक्यनिचयमण्डितं वाक्यनामकं ग्रन्थरत्नं प्राणैषुः । द्रविडाचार्यास्तु

आचार्यान्द्रविडाख्यया सुविदितान् स्तौमि प्रमाणीकृतान्
श्रीमच्छङ्करदेशिकप्रभृतिभी रामानुजाद्यैरपि ।
छान्दोग्योपनिषत्प्रमेयविवृतिर्यैर्ब्रह्मनन्दीरिता
वाक्याख्याऽतिगभीरसूत्रसरणिर्भाष्येण संभूषिता ॥ १२ ॥

छान्दोग्योपनिषद्वाक्यभाष्यकर्तॄन्नुमो वयम् ।
अद्वैतभावानाचार्यान् द्रविडाचार्यसंज्ञितान् ॥ १३ ॥

आचार्यं सुन्दरं पाण्ड्यं नमामः प्राक्तनं गुरुम् ।
पूर्वोत्तरे च मीमांसे वार्तिकैर्येन मण्डिते ॥ १४ ॥

प्रभवात्परमार्थसंग्रहाच्च प्रणयस्थानममुष्य सिद्धशिष्यः ।
विरतक्षितिरक्षणो विरक्त्या हरिरंहो मम दंहतां स्वशक्त्या ॥ १५ ॥

---

तद्वाक्यग्रन्थरत्नं विमलेन भाष्येण अभूषयन् । तेन चैतेषां निरुपपदमेव वाक्यकारा भाष्यकारा इति प्रथा समजायत । तावुभावपि वाक्यभाष्यग्रन्थौ इदानीं दैवदुर्विपाकात् अदृश्यतां गतौ । तत्र वाक्यग्रन्थे अष्टौ भाष्यग्रन्थे नव चाहत्य सप्तदशवाक्यानि अद्वैतग्रन्थेषु, वाक्यग्रन्थे द्वाविंशतिः, भाष्यग्रन्थे एकादश चाहत्य त्रयस्त्रिंशद्वाक्यानि रामानुजादिग्रन्थेषु चोदाहरिषत । तान्येव दैववशादिदानीमुपलभ्यन्ते । व्यासपूजाकाले अद्वैतिभिर्यतिभिः द्रविडाचार्यपञ्चके मध्यगत्वेन द्रविडाचार्याः पूज्यन्ते । गौडपादा इव तदानीन्तनैरनभिज्ञातविशिष्टाभिधेयत्वात् देशवाचिद्राविडशब्दसमभिव्याहार्या अभूवन्निति ज्ञायते ॥

(१४) आचार्यः सुन्दरपाण्ड्योऽपि कदा जात इति न ज्ञायते । तन्निर्मितं ग्रन्थमद्य नोपलभामहे । परं, ब्रह्मसूत्रभाष्ये समन्वयाधिकरणान्ते भगवत्पादैरुदाह्रियमाणं "गौणमिथ्यात्मनोऽसत्वे" इत्यादिकं श्लोकत्रयं पद्मपादीयपञ्चपादिकाव्याख्यायां प्रबोधपरिशोधिन्यां तत्कर्ता आत्मस्वरूपाचार्यः सुन्दरपाण्ड्यप्रणीतमिति परिचाययति ॥

(१५) जगद्गुरुरत्नमालास्तवतः । अमुष्य श्रीगोविन्द-

द्रविडत्रयमात्रेयत्रयं गौडत्रयं तथा ।
अद्वैतबोधसिद्ध्यर्थं नमामः करणैस्त्रिभिः ॥ १६ ॥

## गुरुपरंपरायां संज्ञाभेदः

नारायणः पद्मभवो वसिष्ठः शक्तिश्च तत्पुत्रपराशरश्च ।
व्यासः शुकश्चेति गुरुक्रमोऽयं प्रसिद्ध आस्ते पितृपुत्ररीत्या ॥१७॥

ज्ञानशक्तिबलैश्वर्यवीर्यतेजोभिरन्वयात् ।
भगवत्संज्ञया चेमे स्मर्यन्ते गुरुपुङ्गवाः ॥ १८ ॥

परंपरा शुकाद्या हि गुरुशिष्यक्रमागता ।
शुकशिष्यः परिव्राजामाद्यो गौडश्च जन्मना ॥ १९ ॥

महत्त्वार्थकपादाख्याप्रख्यातः परमो गुरुः ।
भगवत्पादसंज्ञाकौ गोविन्दगुरुशङ्करौ ॥ २० ॥

---

योगीन्द्रस्य । चन्द्रशर्मणः सुताश्चत्वारः भर्तृहरिभट्टिविक्रमवररुचय इति । चन्द्रशर्मैव श्रीगौडपादेभ्यो गृहीतसंन्यासः गोविन्दयोगीन्द्रो बभूव । चन्द्रशर्मणः उत्पन्नोऽयं विषयोपभोगवैतृष्ण्येन निरस्तराज्यचिन्ताभरो निर्वृतः गोविन्दभगवत्पादान शुश्रूषमाणो नित्यान्तेवासी सर्वोत्तरब्रह्मविद्यां परिगृहीतवान् । वाक्यपदीयादिमहाप्रबन्धनिर्माता । वाक्यपदीये बहुल अद्वैततत्त्वं सुस्पष्टं प्रतिपादयत्ययम् । अद्वैतविद्याचार्येषु प्राक्तनेषु अयं विशिष्टतया गण्यते ॥

(१६) द्रविडात्रयदर्शनतः । द्रविडाचार्यो भगवत्पादः अप्पयदीक्षित इति अद्वैताचार्यद्रविडत्रयम । (अप्पयदीक्षितस्थाने अभिनवद्रविडाचार्यतया प्रख्यातानां बालकृष्णानन्दसरस्वतीनां गणनमपि साधु ।) दत्तात्रेयो ब्रह्मनन्दी भगवत्पाद इति अद्वैताचार्यात्रेयत्रयम् । गौडपादः सुरेश्वरः गौडब्रह्मानन्दसरस्वती इति अद्वैताचार्यगौडत्रयम् ॥

भगवान्पद्यते येन गम्यते बोध्यतेऽपि च ।
इति तौ भगवत्पादाभिख्या साऽन्वेति सार्थिका ॥ २१ ॥

अगताध्वप्रापणेन पादावित्र गुरूत्तमः ।
शास्त्रान्तरानवगतब्रह्मबोधोपकारकः ॥ २२ ॥

अज्ञानान्तर्गहनपतितानात्मविद्योपदेशैः
त्रातुं लोकान् भवदवशिखातापपापच्यमानान् ।
त्यक्त्वा मौनं वटविटपिनो मूलतो निस्सरन्ती
शम्भोर्मूर्तिश्चरति भुवने शङ्कराचार्यरूपा ॥ २३ ॥

चरतेर्लट्प्रयोगोऽयं भासते सार्थको, यतः ।
शङ्करस्थापितानेकपीठाधिपतयः समे ॥ २४ ॥

प्रथन्ते शङ्कराचार्याः भिन्नदीक्षाभिधा अपि ।
तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मकाः ॥ २५ ॥

तद्गुणानेव गायन्तः तद्भेदं विवृण्वते ।
एतेषां शङ्कराद्भेदं कञ्चिन्नोपलभामहे ॥ २६ ॥

श्रीशङ्करादविच्छिन्नसंप्रदायप्रवर्तकान् ।
अद्वैतस्थापने धर्मरक्षायां बद्धकङ्कणान् ॥ २७ ॥

मौलप्राग्दक्षिणोदीच्यपश्चिमाम्नायपीठगान् ।
प्रणुमस्तान्परिव्राजः परहंसान् गुरूत्तमान् ॥ २८ ॥

शङ्करसर्वज्ञादीन् प्रणुमः श्रीकामकोटिपीठेशान् ।
एकोनसप्ततिगुरून् इष्टाप्त्यै श्रीजयेन्द्रान्तान् ॥ २९ ॥

## उपोद्घातः

श्रीमत्समस्तसंपत्समृद्धिसंपूर्णरम्यतोत्कर्षम् ।
कञ्चन कलये कालं सार्धद्विसहस्रवत्सरेभ्यः प्राक् ॥ ३० ॥

यस्मिन्भारतवर्षे समभूत् ह्यानवद्यविद्योति ।
नानाकलाकलापप्रसारविस्तारिकीर्तिकमनीयम् ॥ ३१ ॥

प्रतिदिनमधीयमानश्रुतिपरिपूतद्विजातिकुलशोभि ।
षड्दर्शिनीपटिष्ठद्विजगोष्ठीचिन्त्यमानशास्त्रार्थम् ॥ ३२ ॥

वैदिककर्मठविद्वत्परिषदनुष्ठीयमानबहुयागम् ।
अनवरतमुदितनिर्जरभावितसत्यादिसंपदभिरामम् ॥ ३३ ॥

अस्मिन् भारतवर्षे विषयविदूरा महात्मानः ।
भगवद्ध्यानैकपराः तपसा त्यागेन लेभिरे स्वपदम् ॥ ३४ ॥

अस्मिन् विन्यस्य पदं सुरलोकाद् भारती देवी ।
स्वयमवततार भूमौ येनाभूत् कविगुरुः स वाल्मीकिः ॥ ३५ ॥

सूक्तिसुधारसदानात् अखिलानामोदयन् विबुधान् ।
रूपान्तरगतविष्णुः कृष्णद्वैपायनोऽत्र संजज्ञे ॥ ३६ ॥

सूर्याचन्द्रमसाविव सन्तमसं यौ विधूनुतो जगतः ।
ताभ्यां पूतं भारतवर्षं वर्णयतु कः कथङ्कारम् ॥ ३७ ॥

देहस्य वाङ्मनसयोरपि मलमुन्मूलितं येन ।
तेन पतञ्जलिनेदं वर्षमभूष्यात्मनो जनुषा ॥ ३८ ॥

कर्मज्ञानप्रभजनयोगैरौदार्यवीर्यशीलगुणैः ।
विद्याविवेकशिल्पैः वर्षमिदं प्रागदिद्युतन् बहवः ॥ ३९ ॥

श्रीखण्डखण्डजनिभूरगस्त्यवासातिपावनोद्देशः ।
दक्षिणसमीरसूतिर्लसति तदं मलयशैलोऽत्र ॥ ४० ॥

---

(३१–४२) भारतगीततः ।

मातेव पोषयन्ती पयसा देशानबाधमङ्कगतान् ।
श्रीरङ्गसङ्गसङ्गतमङ्गलतुङ्गाऽत्र वहति कावेरी ॥ ४१ ॥

मुक्ताकलितं तीर्थं दधती विरजेव याऽवगाहिजनान् ।
मुक्तामयान् वितनुते प्रवहति सरिदत्र ताम्रपर्णी सा ॥ ४२ ॥

तुङ्गापूर्णावेगिन्याद्या नद्यः शुभा विराजन्ते ।
स्वच्छाः सुखावगाह्याः व्योमस्पृक्पुष्पितद्रुमत्तीराः ॥ ४३ ॥

अहमहमिकया चोलक्ष्वेराः पाण्ड्याश्च पल्लवा इतरे ।
व्यदधुर्यत्तीरेषु श्रीशेश्वरयोर्महान्ति सद्मानि ॥ ४४ ॥

शङ्करभगवत्पादाः परमाचार्या अवातरन्नत्र ।
ये किल सोपानततिं निरमासत मुक्तिसौधमधिरोढुम् ॥ ४५ ॥

यद्ग्रथितसूक्तिमाला सुदृशां प्रतिदेशमुल्लसति कण्ठे ।
तेषां चरितं बहुभिर्ग्रथितं विस्तीर्णमत्र सङ्कलये ॥ ४६ ॥

अंशे शिवरहस्यस्य नवमे सूचितं तथा ।
मार्कण्डेय्यां संहितायां नातिविस्तरतो मनाक् ॥ ४७ ॥

चरितं गुरुनाथस्य बहवः समवर्णयन् ।
बाल्ये सखा शङ्करस्य पश्चात्तच्छिष्यतां गतः ॥ ४८ ॥

तत्र चित्सुखयोगीन्द्रः प्रथमस्मृतिमर्हति ।
अनन्तानन्दगिर्याख्यः शाङ्करं विजयं व्यधात् ॥ ४९ ॥

यस्याप्रतिहताज्ञः स शङ्करः परमो गुरुः ।
ब्रह्मानन्दो गाणपतः सर्वज्ञात्ममुनीशितुः ॥ ५० ॥

---

(४९) ' अनन्तानन्दगिरिरहं अप्रतिहताज्ञस्य भगवतः शिष्यः, मम परमगुरोरवतारप्रयोजनं वक्ष्ये " – आनन्दगिरीये श्रीशंकरविजये प्रथमे प्रकरणे ॥

अधीतशङ्करकथः चकार चरितं महत् ।
श्रीकामकोटिपीठेशो महादेवो गुरूत्तमः ॥ ५१ ॥

सदा व्यासाचलस्थित्या लब्धव्यासाचलाभिधः ।
तेने श्रीभगवत्पादचरितं हृद्यवाङ्मयम् ॥ ५२ ॥

संक्षिप्तमतनोन्नव्यकालिदासाभिधः सुधीः ।
माधवो यं परे प्राहुर्विद्यारण्यं विपश्चितः ॥ ५३ ॥

स्वग्रन्थे माधवः स्तौति प्राच्यं व्यासाचलेश्वरम् ।
धन्यो व्यासाचलो धन्यास्तत्कृतिज्ञा इति स्फुटम् ॥ ५४ ॥

कविर्गोविन्दनाथोऽपि केरलीयो व्यधात्कृतिम् ।
व्यासाचलेशं यः स्तौति शाङ्करे चरिते स्वके ॥ ५५ ॥

"सर्वागमास्पदं वन्दे व्यासाचलमिमं कविम् ।
बभूव शङ्कराचार्यकीर्तिकल्लोलिनी यतः ॥ ५६ ॥

अत्युन्नतस्य काव्यद्रोः व्यासाचलभुवोऽखिलम् ।
अर्थप्रसूनमादातुं न समर्थ" इति स्फुटम् ॥ ५७ ॥

सदाशिवब्रह्मयोगी गुरूणां रत्नमालिकाम् ।
विश्वाधिकात्मबोधेन्द्रादेशात् चक्रे मनोहराम् ॥ ५८ ॥

आत्मबोधयतीन्द्रस्तद्व्याख्याने सुषमाभिधे ।
शाङ्करं चरितं कृत्स्नं सञ्जग्राह ततस्ततः ॥ ५९ ॥

सारस्वतः सदानन्दः चिद्विलासो यतीश्वरः ।
पातञ्जलेऽथ विजये रामभद्रमखीश्वरः ॥ ६० ॥

---

(५४) 'धन्यो व्यासाचलकविस्तत्कृतिज्ञाश्च धन्याः" माधवीये

रत्नखेटश्रीनिवाससुतश्चूडामणिर्मखी ।
विद्वद्वालो लक्ष्मणाह्वयः सच्चिदानन्दसंश्रयः ॥ ६१ ॥

एते चान्ये च बहवोऽवर्णयन् शांकरीं कथाम् ।
कथेयं विस्तृताऽम्शेन भिद्यते तत्र तत्र ह ॥ ६२ ॥

सार्धे वर्षसहस्रे द्वे गते, श्रद्दधिरे यथा ।
प्राक्तनास्तत्सूक्तिगुप्तौ न तथा वृत्तसंग्रहे ॥ ६३ ॥

व्याख्याक्रमोपपन्नत्वात् भक्तिज्ञानोपकृत्त्वतः ।
सूक्तयो रक्षिताः सम्यग् विनैवाक्षरलोपनम् ॥ ६४ ॥

सत्यालङ्करणं वासोभूषणाभं कथानकम् ।
भिद्यते रुचिवैचित्र्यात् सत्यं तेन न भिद्यते ॥ ६५ ॥

विभिन्नं तत्कथावस्तु चात्र सङ्कल्प्यते मया ।
विश्रामकेऽपि चरितक्रमवस्तुनिरूपणे ॥ ६६ ॥

अविभ्रमं श्रये मार्गं गुरुवर्यैः प्रदर्शितम् ।
सदाशिवात्मबोधाद्यैर्गतं दीप्तं तदुक्तिभिः ॥ ६७ ॥

कलये भगवत्पादान् कलितैः प्राच्यवाक्सुमैः ।
क्लृप्तैर्यथामतिरुचि ग्रथितैः स्वोक्तितन्तुषु ॥ ६८ ॥

इति श्रीशङ्करविजयमकरन्दे प्रथम आस्वादः समाप्तः ॥

# ॥ द्वितीय आस्वादः ॥

## पूर्वाचार्यकथासंग्रहः ।

**यद्बोधवशादहं ममेदं तदिहेत्यादिरुदेति भूरिभेदः ।**
**तदखण्डमनन्तमद्वितीयं परमानन्दमयं पदं श्रयेयम् ॥ १ ॥**

वटपादपमूलपट्टभद्रं स्फुटचिन्मुद्रमुदूढमौनमुद्रम् ।
कलितेन्दुकलं कृपासमुद्रं कलये कञ्चन देशिकं विनिद्रम् ॥ २ ॥

कमलाकुचकुम्भकुङ्कुमश्रीकलितोरःस्थलमप्यरागयोगम् ।
करवै मुरवैरिणं महान्तं करुणार्द्रं हृदये कविं पुराणम् ॥ ३ ॥

गरुडाङ्कगभीरनाभिपद्मोदरभूगह्वरनिष्ठनैष्ठिकाग्र्यम् ।
चतुराननमाश्रयामि कामं चतुराम्नायवदावदं सदापि ॥ ४ ॥

कुशिकप्रभवास्त्रशस्त्रपालीप्रशमाचार्यकसिद्धहस्तदण्डम् ।
शमवन्तमरुन्धतीसहायं शरणं यामि वसिष्ठमप्रमेयम् ॥ ५ ॥

---

**सङ्कलने मूलं – जगद्गुरुनवरत्नमालास्तवतः ( श्लो. १-५, ७-१० ) यतिसार्वभौमोपहारतः ( ६ ) बालमनोरमातः ( ११ ) अप्पयदीक्षितेन्द्रकृतनटराजस्तवतः (१२) नटेशविजयतः (१३-२८) पतञ्जलिविजयतः (२९-६०) पुण्यश्लोकमञ्जरीतः (६१) (१-५) निखिलभूतयोनि नित्यशुद्धचैतन्यस्वभावं निर्धर्मकं परं ब्रह्म अध्यारोपापवादाभ्यां प्रदर्श्यते प्रथमम् । निरस्तभेदत्रयं निरुपाधिकं सर्वोत्तरं अवगन्तव्यं वस्तु सर्वानर्थप्रहाणाय प्रथमं शरणीक्रियते । तदेव, सगुणं उपक्रान्तगुरुस्तवानुगुण्येन गुरुराजसंज्ञितं आदिदेशिकं वटपादपमूलरूपसिंहासने मूर्धाभिषिक्तं सम्राट् आश्रितरक्षणे विनिद्रं ध्यायते । सर्वविद्यासंप्रदाय प्रथमाचार्यः स देशिकः । समुपश्लोक्य प्रातिस्विक्येन वेदान्तविद्यागुरुः भगवान्कमलासखः स्तूयते । तदनु अनुपधिकब्रह्मविद्यैकप्रवचनो ब्रह्मा**

